अप्रैल तः मई २०२३ पर्यन्तम्
चैत्र-शुक्ल-एकादशी तः ज्येष्ठ-शुक्ल-एकादशी पर्यन्तम्
(वै-२०८०)

RNI
DELSAN/2013/50379
ISSN:2347-1565

# संस्कृत-चन्द्रिका

## मासिकी संस्कृत-बालपत्रिका

वर्षम्-१० संयुक्ताङ्कः-९-१०





सम्पादकः
डॉ. अरुण कुमार झा
सचिवः

एक साहित्यिक त्रैमासिक पत्रिका

एवं

समकालीन साहित्य के रचनात्मक मूल्यांकन की जीवन्त प्रस्तुति

तथा

सम्पूर्ण देश के प्रसिद्ध साहित्य-साधकों के साथ-साथ नवोदित प्रतिभाओं की सशक्त लेखनी की संयुक्त प्रस्तुति

# "संस्कृत मञ्जरी"

(आई.एस.एस.एन-2278-8360)

संस्कृत भाषा और साहित्य के प्रचार-प्रसार हेतु सतत प्रयत्नशील दिल्ली संस्कृत अकादमी, दिल्ली सरकार द्वारा प्रकाशित एक ऐसी सम्पूर्ण साहित्यिक पत्रिका जो सहज मानवीय संवदेनाओं, शोध-निबन्धों तथा उदात्त जीवन-मूल्यों का अनूठा संगम और प्रत्येक वर्ग के पाठक-समुदाय की अपेक्षा के अनुकूल पठनीय एवं संग्रहणीय है।

मूल्यः- एक प्रति रु. 25/- मात्र, वार्षिक सदस्यता शुल्क रु.100/- मात्र

सुरुचि सम्पन्न स्वस्थ सकारात्मक अभिव्यक्ति की संवाहिका

# "संस्कृत मञ्जरी"

के स्थायी अध्येता बनें।

आज ही अपना वार्षिक सदस्यता शुक्ल नगद, मनिआर्डर अथवा दिल्ली में भुनाये जाने योग्य बैंक ड्राफ्ट दिल्ली संस्कृत अकादमी के नाम से भिजवाकर सदस्यता प्राप्त करें। शुल्क मल्टी सिटी चैक द्वारा भी स्वीकार्य होगा।

पत्र व्यवहार का पता --




सचिव/ सम्पादक, दिल्ली संस्कृत अकादमी, दिल्ली सरकार

प्लाट सं.-५ झण्डेवालान, करोलबाग, नई दिल्ली-११०००५

दूरभाष सं.- ०११-२३६३५५९२, २०९२०३६३

ISSN-2347-1565 मूल्यम्- २५ रूप्यकाणि

# संस्कृत-चन्द्रिका

## 'मासिकी संस्कृत-बाल-पत्रिका'

अप्रैल तः मई
२०२३ पर्यन्तम्

वर्षम्-१०-संयुक्ताङ्कः-९-१०
(वै0-२०८०)
(चैत्र-शुक्ल-एकादशी तः ज्येष्ठ-शुक्ल-एकादशी पर्यन्तम्)








**दिल्ली संस्कृत अकादमी**
(राष्ट्रिय राजधानी क्षेत्रम्, दिल्लीसर्वकारः)
DELHI SANSKRIT ACADEMY
(Govt. of N.C.T. , Delhi)
ई-पत्रिका

## प्रकाशकः

सचिवः

दिल्ली-संस्कृत-अकादमी, दिल्ली-सर्वकारः

प्लॉट सं०-५, झण्डेवालानम्, करोलबागोपनगरम्, नवदेहली-110005

दूरभाषः - 011-23635592, 23637798


## सदस्यताशुल्कम्

प्रति-अङ्कम् : 25 रूप्यकाणि

वार्षिकम् : 250 रूप्यकाणि

ISSN : 2347-1565



शुल्कप्रदानप्रकारः

बैंकधनादेशः (डी०डी०), डाकधनादेशः (मनिआर्डर) अथवा सी०टी०सी० चैक माध्यमेन

(दिल्लीसंस्कृतअकादमीपक्षे)

Mode of payment:
Demand Draft, Money order or by CTC Cheque
( In favour of Delhi Sanskrit Academy)

E-mail Id : sanskritpatrika.dsa@gmail.com
sanskritprakashan.dsa@gmail.com
Website : https://sanskritacademy.delhi.gov.in
Magazine link: https://sanskritacademy.delhi.gov.in/hi/e-magazine

# सम्पादकीयम्

**अयि सुरवाणीसमुपासकाः सहृदयाः!**

यदि विश्वस्य कस्यापि भाषायाः शिक्षणात् पूर्वं संस्कृतस्य अध्ययनं भवति तर्हि सा भाषा सहजता शिक्षितुं शक्यते, यतः संस्कृतभाषायाः व्याकरणस्य आधारेण भिन्नाः भाषाः निर्मिता। इयं वैज्ञानिक भाषा अस्ति, तस्या शिक्षणेन आरोग्यं भवति। प्राचीन ज्ञान विज्ञानेन इदं अवगतं भवति।

संस्कृत भारतीय संस्कृतेः भाषा अस्ति तथा च एषा भाषा मनुष्यस्य चरित्र निर्माणे सहायका अस्ति तथा च अस्या पठन पाठनेन् विखण्डित समाजस्य एकीकरणस्य सामर्थ्यं वर्तते। अतः निवेदनमिदम् यत् बाल्यकालात् एव व्यावहारिक संस्कृतस्य अध्ययनं अध्यापनं कुर्वन्तु इति।

**शकाब्दः १९४५**

भावत्कः

**( डॉ. अरुणकुमारझा )**

सचिवः

# भारतगौरवणडम्

-डॉ.देवीसहाय पाण्डेयः ''दीप''

उदेति संध्यासमये निशेशः
        यथा महामण्डलमण्डलेशः।
स्वकौमुदीकुङ्कुमलिप्त एषः
        विराजते वै गगने विशेषः ॥१॥



कृताङ्गरागः कुमुदप्रियोऽयं
        चकोरवृन्दाय सुखं ददानः ।
ज्योत्स्नोत्तरीयं[१] परितः प्रसार्य
        यावन्निशां नृत्यति मत्तचन्द्रः ॥२॥

मन्दस्मितेनैव विभाकरस्य
        सुपूरितोऽयं सकलप्रदेशः ।
शैवालतुल्यं[२] लघुमेघखण्डं
        व्योम्नस्तटाके तरतीति रम्यम् ॥३॥

व्योम्नस्तटाके विकचाब्जतुल्यं
        विलोक्य रूपं शशिनस्तथैव ।
तारागणानामवली विमुग्धा
        मिलिन्दरूपा गगनाङ्गनेऽस्ति ॥४॥



अथ प्रदीप्तं शशिनं विलोक्य
        तारास्तथा हेमपतङ्गतुल्याः ।
आगत्य सद्यः परितः नभश्च
        शशिप्रदीपं परिवारयन्ति ॥५॥

प्रतानितं यन्नभसो वितानं
        घण्टेव चन्द्रः परिलम्बितोऽस्मिन् ।
यावन्निशीथं[३] न च कोऽपि जाने
        के मौनघण्टां परिवादयन्ति ॥६॥

---

१. ज्योत्स्नोत्तरीय = चाँदनीरूपी दुपट्टा २. शैवाल = सेवार। ३. निशीथ = अर्द्धरात्रि ।

समुत्पतन्तं कलकूजनस्थं
        गुल्मेषु सङ्घं चटकस्य[१] पश्य ।
विभाति चैवं मणिमौक्तिकस्य
        माला विशाला त्रुटितातिं दिव्या ॥ ७॥



नीडे निजे पादपकोटरस्थे
        स्वचञ्चुना चञ्चुषु शावकानाम् ।
भक्ष्यं क्षिपन् वै सुविहङ्गसङ्घ-
        स्तनोति तत्र द्विगुणातिशोभाम् ॥ ८॥

श्यामां घटां व्योम्नि विलोक्य रम्यां
        मुदान्विता या वकपंक्तिमाला ।
समुत्पतन्ती हरतीति चित्तं
        प्रतीयते सा कियती मनोज्ञा ॥ ९॥

आम्रस्य वृक्षे हरिते सुरम्ये
        फलं स्वदन्तं हरिताभयुक्तम् ।
दृष्ट्वा शुकं किंशुकरक्ततुण्डं
        चित्तं प्रसन्नं नहि कस्य जातम् ॥ १०॥



शाखानुरक्तद्विजवृन्दमध्ये
        वरासनस्थाः पिकपण्डिता ये ।
अहर्निशं माधव[४]रागिणस्ते
        गायन्ति दिव्यं मधुवर्षिगीतम् ॥ ११॥

शिखाधरः शोभनकण्ठकेकी
        पिच्छस्य वृत्तं विरचय्य नित्यम् ।
करोति नृत्यं विपिने प्रमत्तः
        ईषद्धि सञ्चाल्य सुनीलकण्ठम् ॥ १२॥

---

१. चटक = गौरैय्या पक्षी ।

२. किशुरक्ततुण्डं = टेसू के फूल की भाँति लाल लाल चोंच वाला ।

३. शाखानुरक्त = वृक्षों की शाखा के प्रेमी, वेदों की शाखा के प्रेमी ।

४. माधव = विष्णु, वसंत ।

उष्णीषरूपां लतिकां विधृत्य
तिष्ठन्ति वृक्षाः परितः प्रपश्य ।
प्रसूनताङ्क[1] युता लतास्ताः
नटन्ति रम्याः कटिचालनेन ॥ १३॥



सङ्गीतगीतं पिकचातकानां
तथाविधं तद्भ्रमरावलीनाम् ।
संश्रुत्य सर्वं पशुपक्षिवर्गो
मुदान्वितोऽयं निखिलो निसर्गः[2] ॥ १४॥

अश्वत्थवृक्षः सरसो रसज्ञः
श्रुत्वा सुगीतं सुविलोक्य नृत्यम् ।
ददात्यहो शोभनसाधुवादं
पत्राणि ताला इव वादयित्वा ॥ १५॥

वरं सरस्तुङ्गतरङ्गसङ्गं
स्वाम्भोजनेत्रैरवलोक्य शोभाम् ।
तरङ्गतालेन तटेन साकं
प्रमोदजालं प्रकटीकरोति ॥ १६॥



देशाङ्गणे ये ऋतवो नटन्ति
ते मुक्तहस्ता वितरन्ति शोभाम् ।
सर्वस्य चित्तं ननु चोरयन्ति
क्रमेण तेषां रमणं प्रपश्य ॥ १७॥

ऋतोः रथस्थः ऋतुराज एषः
सुरम्यवेशः पिकवैणिकः सः ।
विहारशीलः सरसो वसन्तो
वने समस्ते मधु वर्षतीति ॥ १८॥

– लवकुश नगरम्, रामघाटः, अयोध्या
उत्तर प्रदेशः

१. ताटङ्ग = कुण्डल या कर्णफूल। २. निसर्ग = सृष्टि ।

# ‘‘मदीयदेशो भुवि भव्य आस्ते’’

-दण्डपाणिराचार्यः

वेदवेदाङ्गवेदान्तन्यायशास्त्रार्थकोविदम् ।
अस्मदाचार्यवर्यं श्रीगोविन्दाय समाश्रये ।।

**दयाक्षमाशान्तिसुहृत्त्वभावैः**
**परोपकारं परिशीलयन्तः ।**
**सुखं जना यत्र नयन्ति कालं**
**मदीयदेशो भुवि भव्य आस्ते ।।१।।**

**यद्गौरवं भारतगौरवीय-**
**रुत्तुंगकेतुर्जयतुंगमास्ते ।**
**तन्नम्रमूर्धा मम यत्र देशो**
**मदीयदेशो भुवि भव्य आस्ते ।।२।।**



**सत्यस्य धर्मस्य च यत्र मानम्**
**स्नेहं च यत्रास्ति सुप्रतीकम् ।**
**शान्त्या सदा यत्र जना वसन्ति**
**मदीयदेशो भुवि भव्य आस्ते ।।३।।**

**खगोलभूगोलरसायनादि-**
**विज्ञानकार्याणि समाश्रयन्तः ।**
**वैज्ञानिका यत्र जयं भजन्ते**
**मदीयदेशो भुवि भव्य आस्ते ।।४।।**

**न लोभयन्तो न च मोहयन्तो**
**नवीनकार्यं परिदर्शयन्तः।**
**विज्ञा जना यत्र मुदा वसन्ति**
**मदीयदेशो भुवि भव्य आस्ते ।।५।।**

**लोभो न कश्चिन्न मदो कुतश्चित्**
**क्रोधो न कश्चित्कुनयो न कश्चित् ।**
**देदीप्यते यत्र च नीतिमार्गो**
**मदीयदेशो भुवि भव्य आस्ते ।।६।।**

विचित्रवर्णैर्विविधप्रकारै-
र्द्रुमादिभिः भूषितसौम्यभूमिः ।
सस्यादिपूर्णा रमणीयभूमि-
र्मदीयदेशो भुवि भव्य आस्ते ॥७॥

सम्मोहनै रागकलावतंसैः
कण्ठीरवानां मधुरैर्निनादैः।
सम्मोहिता यत्र जनाश्चरन्ति
मदीयदेशो भुवि भव्य आस्ते ॥८॥



प्रभातकाले मुनिवृन्दगीतो
वेदध्वनिः कृन्तति पापतापम् ।
धर्मप्रभा भाति जनेषु यत्र
मदीयदेशो भुवि भव्य आस्ते ॥९॥

क्वचिज्जनाः काव्यसुधाप्रपन्नाः
क्वचिच्च संगीतसुधाप्रपन्नाः ।
क्वचिज्जना भक्तिसुधाप्रपन्नाः
मदीयदेशो भुवि भव्य आस्ते ॥१०॥

इयं हि देवभाषया स्वकीयदेशगौरवं
गुरोः पदाब्जसौरभप्रसन्नतेजसा मया।
मनोहरं सुावहं व्यवर्णि दण्डपाणिना
प्रसीदतु श्रियः पतिः श्रिया सहैव भूषितः ॥११॥

-शास्त्रिद्वितीयवर्षम्
हरिप्रियागुरुकुलम्, दिल्ली

# श्रीनारदभक्तिकारिका

-अंकुर नागपालः

**भक्तिरीशे परम्प्रेमरूपाऽमृतस्वरूपिणी ।**
**यां लब्ध्वा ह्यमृतः सिद्धस्तृप्तो भवति पूरुषः ॥१॥**

ईश्वर में अमृत (अर्थात् कभी नष्ट न होने वाले) परम प्रेम को भक्ति कहते हैं; जिसको प्राप्त करके व्यक्ति अमर, सिद्ध एवं तृप्त हो जाता है। (सू.१-४)

**प्राप्य तां न क्वचित्किञ्चिद् द्वेष्टि वाञ्छति शोचति ।**
**आसक्तिर्नैव भोगेषूत्साहो तस्य न जायते ॥२॥**

उस (भक्ति) को प्राप्त करके वह कहीं द्वेष नहीं रखता, न कुछ चाहता है, न शोक करता है। और न ही भोगों में उसकी आसक्ति अथवा उत्साह होता है। (सू.५)

**आत्मारामश्च तां ज्ञात्वा मत्तो भवति शान्तधीः ।**
**भक्तिर्निरोधरूपत्वान्नैव कामादिरञ्जिता ॥३॥**

उस (भक्ति) को जानकर पुरुष आत्माराम, उन्मत्त एवं शान्तबुद्धि हो जाता है। निरोधरूपा होने से भक्ति काम-आदि से रंजित नहीं होती। (सू.६-७)

**सन्न्यस्य लोकवेदोक्तकर्त्तव्यानि पुनर्हरौ ।**
**अनन्यताऽविरुद्धेति निरोधो कथ्यते बुधैः ॥४॥**

लोक एवं वेद में कहे गए कर्तव्यों को छोड़कर केवल भगवान् श्रीहरि में अनन्यता एवं उनके प्रति अविरुद्धता को विद्वानों के द्वारा 'निरोध' कहा गया है। (सू.८)

**अन्याश्रयपरित्याग उच्यतेऽनन्यता सता ।**
**लोकवेदानुकूलेह कृतिरेवाविरुद्धता ॥५॥**

भगवान् के अतिरिक्त अन्य सभी आश्रयों के परित्याग को विद्वानों ने 'अनन्यता' कहा है। इस जगत् में लोक एवं वेद के अनुकूल कृति (आचरण) को 'अविरुद्धता' कहते हैं। (सू.९-११)

**भक्तिसिद्धौ न वै त्याज्यं वेदाचरणमुत्तमैः ।**
**रक्षणाय च तस्यास्मिंल्लोके वा पतनं ध्रुवम् ।**
**देहधारणमुख्या च लोकाचरणसङ्गतिः ॥६॥**

भक्ति की दृढ़तर स्थिति प्राप्ति हो जाने पर भी उत्तम पुरुषों के द्वारा वेदानुकूल आचरण त्याज्य नहीं होता। इस लोक में आचरणपूर्वक उसकी रक्षा करनी चाहिए, अथवा पतन सुनिश्चित है। और लौकिक व्यवहारों की संगति शरीरधारण-आदि को दृष्टि में रकर लगा लेनी चाहिए। (सू.१२-१४)

**भक्तिं पूजादिकृत्येषु ह्यनुरागमवोचत ।**
**पाराशर्यः पुनर्गर्गः कथादिषु हरेर्दृढम् ।**
**आत्मरत्याविरुद्धे च शाण्डिल्यो ह्यब्रवीदिमाम् ॥७॥**

पराशरनन्दन व्यासजी ने भगवान् श्रीहरि की पूजा-आदि कृत्यों में दृढ़ अनुराग को तथा महर्षि गर्ग ने श्रीहरि की कथा-आदि में दृढ़ अनुराग को भक्ति कहा है। महर्षि शाण्डिल्य ने आत्मरति से अविरुद्ध विषय में दृढ़ अनुराग को भक्ति बतलाया है। (सू.१५-१८)

**ईशार्पिताखिलाचारा हरिविस्मृतिशोकदा ।**
**बुद्धिर्भक्तिरिति ख्याता नारदेन महात्मना ॥८॥**

महात्मा नारद के द्वारा ईश्वर में सभी आचरणों (कर्मो) के अर्पण को तथा भगवान् के विस्मरण में शोक देने वाली बुद्धि (मनोभावना) को भक्ति बतलाया गया है। (सू.१९)

**गोपिकानां यथा भक्तिरीशबुद्धिं विना हरौ ।**
**तद्विहीना च जाराणामिव लोकेऽनुभूयते ।**
**तत्सुखेन सुखित्वञ्च यत्र नास्ति कदाचन ॥९॥**

गोपियों की भगवान् श्रीहरि में भगवद्बुद्धि रखे बिना भी भक्ति थी। लोक में भगवद्बुद्धिविहीन भक्ति तो जारों की देखी जाती है; जिसमें प्रिय के सुख से ही सुखी होना कभी कहीं नहीं दिखता। (सू.२०-२४)

**फलत्वाज्ज्ञानयोगाभ्यां कर्मणेयं वरा स्मृता ।**
**ईश्वरोऽभिमतिद्वेषी दैन्यप्रीतिकरो मतः ॥१०॥**

फलप्रदा होने के कारण यह (भक्ति) तो कर्म, ज्ञान एवं योग से भी श्रेष्ठ कही गई है। ईश्वर अभिमान के द्वेषी तथा दैन्य के प्रेमी बतलाए गए हैं। (सू.२५-२७)

**ज्ञानसाध्या हरेर्भक्तिरिति कस्यचिदाशयः।**
**मिथ आश्रयतां कश्चिन्मनुते भक्तिज्ञानयोः।**
**ब्रह्मपुत्रास्तु भक्तश्च कल्पिताऽऽत्मफलात्मता ॥११॥**

किसी आचार्य का आशय है कि ज्ञान के द्वारा हरिभक्ति प्राप्त होती है। जबकि कोई-कोई लोग उक्त दोनों--भक्ति और ज्ञान--की परस्पर आश्रयता मानते हैं। ब्रह्मपुत्रों (सनक-आदि) ने तो भक्ति की स्वयं फलरूपता को कहा है। (सू.२८-३०)

**राजगृहादिविषये तथैवालक्ष्यते ननु।**
**तज्ज्ञानेन यतो राज्ञस्तुष्टिक्षुच्छान्तिरेव च।**
**जायेते न ततश्चेयं भक्तिर्ग्राह्या मुमुक्षुभिः ॥१२॥**

ठीक वैसे ही, जैसे राजगृह-आदि विषयों में भी देखा जाता है; कि उनके ज्ञानमात्र से राजा को तुष्टि एवं क्षुधानिवृत्ति नहीं होती। इसलिए मुमुक्षुओं को इस भक्ति का ग्रहण करना चाहिए। (सू.३१-३३)

**तत्साधनानि प्रोक्तानि देशिकेन्द्रैर्महात्मभिः ।**
**विषयासङ्गसन्यासादखण्डभजनात्तथा ॥१३॥**

**भगवद्गुणानुश्रवणात्कीर्तनाच्च हरेरिह ।**
**जायते भगवद्भक्तिरीषद्धरिकृपावशात् ॥१४॥**

महान् आचार्यों के द्वारा उस (भक्ति) के कुछ साधन कहे गए हैं : विषय (भोग) एवं उनके संग (आसक्ति) को पूर्ण छोड़ने से, भगवान् श्रीहरि का अखण्ड (निरन्तर) भजन करने से, भगवद्गुणों के श्रवण एवं कीर्तन करने से तथा भगवान् के कृपालेश से उनमें भक्ति प्राप्त होती है। (सू.३४-३८)

**अथ वा महतां सङ्गाद्दुर्लभाज्जगतीतले।**
**भगवत्कृपया लब्धादमोघादिति निश्चितः ॥१५॥**

अथवा ऐसा कहा गया है कि भगवतकृपा से प्राप्त होने वाले महापुरुषों के अमोघ सत्संग से, जो वस्तुतः इस धरती पर अत्यन्त दुर्लभ है, भगवान् में भक्ति प्राप्त होती है। (सू.३९-४०)

**भगवत्तज्जनाभेदभावात्सज्जनसङ्गता ।**
**साध्यतां भजते लोके नैव दुःसङ्गता पुनः ॥१६॥**

भगवान् एवं उनके जनों (भक्तों) में अभेद होने के कारण, इस लोक में सत्संग ही साध्य (कर्तव्य) है; न कि कुसंग। (सू.४१-४३)

**कामक्रोधौ यतो मोहः स्मृतिभ्रंशस्ततो मतेः ।**
**नाशस्ततः पुनर्नाशः सर्वस्यैव कुसङ्गतः ॥१७॥**

कारण कि उस कुसंग से काम, क्रोध, मोह, स्मृतिभ्रंश, बुद्धिनाश तथा अन्ततः अपना सर्वनाश हो जाता है। (सू.४४)

**आदिकाले तरङ्गत्वं प्रतिक्षणविवर्धनात् ।**
**समुद्रत्वञ्च गच्छन्ति कामक्रोधादयो मताः ॥१८॥**

ये काम-क्रोध-आदि ऐसे हैं; जो अपने आरम्भकाल में तरंग-जैसे छोटे होते हैं तथा प्रतिक्षण बढ़ते-बढ़ते समुद्र-जैसे विशाल हो जाते हैं। (सू.४५)

**महानुभावसेवाया निर्ममो भवति नरः ।**
**मायायास्तरति नूनं सङ्गं त्यक्त्वा महामतिः ॥१९॥**

महापुरुषों की सेवा से व्यक्ति निर्मम (ममतारहित) हो जाता है। तब वह श्रेष्ठ बुद्धि वाला व्यक्ति निश्चित ही सभी आसक्तियों को छोड़कर माया से पार उतर जाता है। (सू.४६)

**विविक्तस्थानसंसेवी लोकबन्धनभेदकः।**
**निस्त्रैगुण्यस्तरत्यत्र त्यक्तयोगक्षेमः सुधीः ॥२०॥**
**न्यस्तकर्मफलः कर्मसन्न्यासी द्वन्द्ववर्जितः ।**
**वेदातीतो ह्यविच्छिन्नमनुरागङ्गतः पुनः ।**
**तारयत्यन्यलोकांश्च सत्यमेतद्वचो मम ॥२१॥**

निर्जनस्थान में रहने वाला, लोकबन्धनों (सम्बन्धों) को छोड़ चुका, तीनों गुणों से ऊपर उठ चुका, योग (अप्राप्त की प्राप्ति) एवं क्षेम (प्राप्त के रक्षण) को छोड़ चुका बुद्धिमान् व्यक्ति पार उतर जाता है। और सभी कर्मफलों को छोड़ चुका ऐसा व्यक्ति, कर्मों को त्यागकर, निर्द्वन्द्व होकर, वेदों से स्वतः ऊपर उठ जाता है। भगवान् के अखण्ड अनुराग को प्राप्त हुआ वह भक्त अन्य लोगों को भी तार देता है---मेरा यह वचन सत्य है। (सू.४७-५०)

**अनिर्वाच्यमथो प्रेमस्वरूपमवलक्ष्यते ।**
**मूकास्वादनवल्लोके दृश्यते पात्र एव हि ॥२२॥**

प्रेम का स्वरूप अनिर्वचनीय दिखता है, मानो गूंगे को प्राप्त हुआ स्वाद [जिसकी वह व्याख्या नहीं कर सकता]। इस लोक में किसी योग्य पात्र में वह दिखता है। (सू.५१-५३)

**गुणैः कामैर्विरहितं वर्धमानं क्षणात्क्षणात् ।**
**अविच्छिन्नमथो सूक्ष्ममनुभाव्यं सता हृदि ।**
**तत्प्राप्य पश्यति तच्च शृणोति चिन्तयञ्च तत् ॥२३॥**

वह (प्रेम) गुणों एवं कामनाओं से सर्वथा रहित होता है, प्रतिक्षण बढ़ता है, अविच्छिन्न एवं अत्यन्त सूक्ष्म होता है। केवल सत्पुरुषों के हृदयों में ही इसका अनुभव होता है। उसको पाकर प्रेमी केवल उसी को सुनता है तथा उसकी का चिन्तन करता है। (सू.५४-५५)

**गुणभेदादथार्तादिभेदात्त्रिधा श्रुता त्वियम् ।**
**परम्परं प्रशस्तिञ्च भजते पूर्वपूर्वतः ॥२४॥**

सत्त्व-आदि गुणों के भेद से अथवा आर्त-आदि भेद से यह भक्ति तीन प्रकार की सुनी जाती है। उनमें उत्तरोत्तर अपने पूर्ववर्ती से श्रेष्ठ है। (सू.५६-५७)

**सर्वस्मात्सुलभा भक्तिः शान्तिरूपादियं भृशम् ।**
**परमानन्दरूपत्वात्स्वयम्प्रमाणताङ्गता ॥२५॥**

शान्तिरूप एवं परमानन्दरूप होने से; अन्य सभी साधनों की अपेक्षा भक्ति सुलभ है। इसको सिद्ध करने के लिए किसी प्रमाणान्तर की आवश्यकता नहीं है, भक्ति स्वयं प्रमाणरूप है। (सू.५८-६०)

**नारायणकृतित्यागी लोकहानिं न चिन्तयेत् ।**
**परं तां चिन्तयेद्धेयामसिद्धः कर्मवर्जने ।**
**त्यागं कर्मफलस्येदं भक्तिसाधनमुन्नतम् ॥२६॥**

भगवान् श्रीमन्नारायण के प्रति अपने सभी कर्मों को त्याग (अर्पित) कर चुका भक्त लोकहानि की चिन्ता न करे। किन्तु जब तक वह असिद्ध (अपरिपक्व) भक्त है, तब तक कर्मत्याग से होने वाली लोकहानि को वह हेय ही समझे [अर्थात् कर्मत्याग न करे]। कर्मफल से त्याग को भक्ति का उन्नत साधन कहा गया है। (सू.६१-६२)

**स्त्रीवैरिवित्तनास्तिक्यचरित्रं न श्रवेत्पुनः ।**
**दम्भाभिमानमुख्यानि त्यजेच्च भगवन्मना ॥२७॥**

भगवान् में मन को लगाकर रखने वाले भक्त को कभी स्त्री, वैर रखने वाले, धन, नास्तिकता वाले चरित्रों को नहीं सुनना चाहिए। और उसको चाहिए कि वह दम्भ-अभिमान-आदि का त्याग कर दे। (सू.६३-६४)

**ईशार्पिताखिलाचारः कामक्रोधयुतो यदि ।**
**ततः समर्पयेत्कामक्रोधादीनि हरौ मुदा ॥२८॥**

ईश्वर के प्रति अपने सभी कर्मों को अर्पित करने वाला भक्ति यदि काम-क्रोध-आदि से युक्त भी हो, तो उसको अपने काम-क्रोध-आदि को प्रसन्नतापूर्वक श्रीहरि में ही समर्पित कर देना चाहिए। (सू.६५)

**सेव्यसेवकसेवाख्यं त्रिरूपभङ्गलक्षितम् ।**
**हरौ दास्यपरां कान्तापरां वा प्रीतिमाचरेत् ॥२९॥**

सेव्य-सेवक-सेवा-इस त्रिपुटी के रूप में सदैव श्रीहरि में ही दास्यभक्ति अथवा कान्ताभक्ति रूपी प्रेम करना चाहिए। (सू.६६)

**एकान्तिनः परा भक्ताः रोमाञ्चादिविभूषिताः ।**
**पावयन्ति धरां धात्रीं परस्परमथो मुदा ॥३०॥**

रोमांच-आदि [आठ महाभावों] से युक्त रहने वाले एकान्ती भक्त श्रेष्ठ हैं, वे प्रेमपूर्वक पृथिवी एवं अपनी माता को पवित्र करते हैं। (सू.६७-६८)

**तीर्थानां तीर्थताऽस्मच्च कर्मणां कर्मशीलता ।**
**शास्त्राणां शास्त्रता नित्यमेकान्तिभ्यश्च सर्वशः ॥३१॥**

उन्हीं एकान्ती भक्तों से ही सदैव तीर्थों का तीर्थत्व है, कर्मों में कर्मत्व है, शास्त्रों का शास्त्रत्व है। (सू.६९)

**तन्मयान् भगवद्भक्तान्नवलोक्य महात्मनः ।**
**मोदन्ते पितरो देवा नृत्यन्ति रक्षिता धरा ॥३२॥**

उन तन्मय (भगवन्मय) भगवद्भक्तों को देखकर महात्मालोग प्रसन्न हो जाते हैं, पितृगण एवं देवगण नाचते हैं तथा पृथिवी स्वयं को सुरक्षित मानती है। (सू.७०-७१)

**जातिविद्याक्रियारूपकुलवित्तादिभेदिताः ।**
**नैव साध्याः यतो भक्ता नारायणपरायणाः ॥३३॥**

उनमें जाति, विद्या, क्रिया, रूप, कुल, धन आदि का भेद नहीं किया जा सकता; क्योंकि वे भक्तलोग तो भगवान् श्रीमन्नारायण के अनुगत हैं। (सू.७२-७३)

**वादश्च नावलम्ब्योऽस्य बाहुल्यत्वाद्विजानतः ।**
**भक्तिशास्त्राणि चिन्त्यानि भक्तिवृद्धिर्यतो भवेत् ॥३४॥**

भक्त को विवाद में नहीं फंसना चाहिए; क्योंकि उसमें विस्तार का भय है। उसको सदैव भक्तिशास्त्रों का ही चिन्तन करना चाहिए; ताकि उसकी भक्ति में वृद्धि हो। (सू.७४-७६)

**सुदुःखार्थंदिद्वन्द्वानां त्यागात्कालं क्षणं पुनः ।**
**व्यर्थं नैव प्रकुर्वंश्च भगवद्भक्तिमाचरेत् ॥३५॥**

सुख-दु:ख-आदि द्वन्द्वों को छोड़कर एक-एक क्षण के काल को भी व्यर्थ न करता हुआ वह केवल भगवद्भक्ति करे। (सू.७७)

**अहिंसा सत्यमास्तिक्यं शौचं दयादिकं व्रतम् ।**
**पालनीयानि सद्भिश्च भक्तिमार्गानुवर्तिभिः ॥३६॥**

भक्तिमार्ग पर चलने वाले सत्पुरुषों के द्वारा अहिंसा, सत्य, आस्तिकता, पवित्रता, दया-आदि व्रत सदैव पालन करने योग्य हैं। (सू.७८)

**सर्वदा सर्वभावेन भजनीयः सदा हरिः।**
**यतश्च कीर्तितो भक्तान् प्रमोदयति सोऽचिरात् ॥३७॥**

सभी कालों में तथा सभी भावों से सदा केवल श्रीहरि ही भजनीय हैं; क्योंकि वही कीर्तित होकर अपने भक्तों को यथाशीघ्र प्रमुदित करते हैं। (सू.७९-८०)

**कायेन मनसा वाचा भक्तिरेव गरीयसी ।**
**गुणमाहात्म्यतो रूपार्चास्मरणेभ्यश्च दास्यतः ॥३८॥**
**सख्यतः कान्तभावाच्च वात्सल्यात्तन्मयादथ ।**
**स्वात्मनिवेदनात्पुंसो भेदात्परविरहादिति ।**
**एकादशप्रकारेयं भक्तिर्गीता महात्मभिः ॥३९॥**

शरीर, मन, वाणी से भी भक्ति ही श्रेष्ठ है। गुणमहिमावर्णन, रूपध्यान, अर्चना, स्मरण, दास्यभाव, सख्यभाव, कान्तभाव, वात्सल्यभाव, तन्मयता, आत्मनिवेदन एवं परमविरहभाव---महात्माओं ने इन ग्यारह प्रकार की भक्ति को कहा है। (सू.८१-८२)

**कुमारव्यासशाण्डिल्यशुकगर्गप्लवङ्गमाः ।**
**बलिशेषोद्धवा विष्णुः कौण्डिन्यश्च विभीषणः ।**
**भक्त्याचार्या इमे सर्वे प्रवदन्ति मनीषिणः ॥४०॥**

ऐसा भक्तिशास्त्र के कुमार (सनक-आदि), व्यास, शाण्डिल्य, शुक, गर्ग, हनुमान्, बलि, शेष, उद्धव, विष्णु, कौण्डिन्य, विभीषण आदि मनीषी आचार्यलोग कहते हैं। (सू.८३)

**यत्प्रोक्तं नारदेनात्र शिवशासनमुत्तमम् ।**
**एतद्यो मन्यते भक्तः स नूनं लभते प्रभुम् ॥४१॥**

महर्षि नारदजी के द्वारा यहाँ जो कल्याणकारी एवं उत्तम शासन कहा गया है, उसको जो मानता है, वह भक्त निश्चित ही भगवान् को प्राप्त कर लेता है। (सू.८४)

**स्वस्तीदं नारदीयं हरिजनपणितं भक्तिशास्त्रं गभीरं**
**सङ्क्षिप्तं कारिकाभी रघुवरमनसा नागपालाङ्कुरेण ।**
**स्वामी श्रीमन्नृसिंहस्त्रिजगति भगवान् प्राप्तपूजोऽद्य शम्भुः**
**कुर्याद्दृष्टिप्रसादात्प्रमुदितहृदयान्दास्यभक्तान् स्वकीयान् ॥४२॥**

भगवान् श्रीरघुवीरजी में मन लगाने वाले अंकुर नागपाल के द्वारा हरिभक्तों के द्वारा सम्मानित, इस अत्यन्त गम्भीर एवं कल्याणकारी 'नारदीय भक्तिशास्त्र' को कारिकाओं के रूप में संक्षिप्त किया गया है। आज (नृसिंहजयन्ती के दिन) तीनों लोकों में पूजा को प्राप्त कर रहे कल्याणकारी भगवान् श्रीलक्ष्मीनृसिंहदेव अपने दृष्टिप्रसाद से अपने दास्यभक्तों को प्रमुदित हृदय वाला करें।

***॥ इत्यत्र श्रीनारदभक्तिकारिका सम्पूर्णतामभजत् ॥***



**-४/९-१० डबल स्टोरी,**
**विजयनगरम्, देहली-११०००९**

# ‘चिकित्सक-रुग्णौ’ क्रीड़ा

**-डॉ. हर्षदेव माधवः**

विमर्शस्य गृहस्य कक्षे त्रयः बालकाः द्वे बालिके प्रतिवेशिनां गृहेभ्यः आगत्य क्रीडन्ति। ते सर्वे ‘चिकित्सक-रुग्ण’ क्रीडां क्रीडन्ति। तेषु एकः चिकित्सकः भवति। अन्ये सर्वे रुग्णानां सम्बन्धिनः सन्ति। विमर्शः चिकित्सकः अस्ति।

**विमर्शः** – आगच्छन्तु सर्वे। चिकित्सालयः अस्ति अत्र। सर्वे पंक्तौ तिष्ठन्तु।

**सर्वे** – बाढम्।

**भूमिः** – महादेय, मम पुत्तलिका व्याधिग्रस्ता वर्तते। सा द्वाभ्यां दिवसाभ्यां न किमणि खादति।

**विमर्शः** – अत्र उच्चपीठे तां स्थापय।

(भूमिः स्वपुत्तलिकाम् उच्चपीठे स्थापयति। विमर्शः रुग्णां पुत्तलिकां परीक्षते।)

**भूमिः** – एषा पुत्तलिका बहिः गच्छति, किन्तु गृहम् आगत्य पादौ न प्रक्षालयति। मुखं न परिमार्जयति। सा वस्त्राणि न परिवर्तयति। कक्षे स्वपिति। अतः मशकाः तां दशन्ति। दन्तधावनं न करोति। अतः तस्याः दन्ताः अपि दूषिताः रथ्यायां मलिनजले वृष्टौ स्नायति। पुनः गृहे न स्नायति। विमर्शः विषाणूनां रोगसञ्चारः लक्ष्यते। त्रयाणां दिवसानाम् औषधं ददामि। किन्तु स्वास्थ्यं रक्ष। बहिः न गच्छ। संपूर्णः विश्रामः आवश्यकः।

(भूमिः स्वपुत्तलिकाम् अङ्के गृहीत्वा दूरे तिष्ठति।

**मालवः** – महोदय, मम पुत्तलकः खादति किन्तु अन्नस्य पाचनं न भवति। दिवसे आम्लाः उद्गाराः भवन्ति।

**विमर्शः** – तव पुत्तलकाय शीघ्रं पक्वं भोजनं (Fast Food ) रोचते। सः भोजनं न दन्तैः चर्वति। पश्य, चाकलेहेन तस्य दन्ताः अपि श्यामाः क्षीणाः जाताः। सः रात्रौ विलम्बेन खादति। असौ मध्ये रात्रौ जलपूरिकां (गोल-गप्पे) खादति। तेन तस्य पाचनं न भवति। त्वम् एव तस्य उपचारं कुरु। अहम् औषधं ददामि। सप्ताहं यावत् बहिः भोजनं न कर्तव्यम्।



**विमर्शः** – किरात! अधुना त्वं चिकित्सकः भव।

**किरातः** – अन्यः कोऽस्ति?

**मैत्री** – श्रीमन्! मम पुत्तलिका नेत्रपीडाम अनुभवति। सा पठने निपुणा किन्तु सा पठितुं न शक्नोति। सा वाचकाले नेत्रयोः पीडाम् अनुभवति।

**किरातः** – भगिनि। तां उच्चपीठे स्थापय।

(मैत्री स्वपुत्तलिकां स्थापयति।)

**किरातः** – तस्या नेत्रे रक्ते जाते। सा दिवसे किं करोति?

**मैत्री** – सा दूरदर्शनं पश्यति। तस्यै कार्यक्रमाः अतीव रोचन्ते।

**किरातः** – रात्रौ तिमिरे चलदूरभाषं पश्यति किम्?

**मैत्री** – आम! तातपादस्य दूरभाषं स्वीकृत्य निशीथं यावत् सा चलदूरभाषेण क्रीडिति।

**किरातः** – अतः एव तस्याः नेत्रे क्षीणे जाते। समीपस्थम् उपनेत्रस्य आपणं गत्वा नेत्रयोः परीक्षणं कारय।

**मालवः** – वयं चिरं यावत् क्रीडामः। आगच्छत, प्रार्थनां कृत्वा उपाहारं कुर्मः।

**सर्वे** – **सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चित् दुःखभाग् भवेत्॥**

(सर्वे उपाहारपुरेभ्यः उपाहारं कुर्वान्ति आलयन्ति हसन्ति च)



**– ८, राजतिलक बंगलो**
**आबादनगरम्, स्थानकस्य समीपे,**
**बोपल, अहमदाबादः – ३८००५८**

# भूमण्डलपरिक्रमा

**–ओमप्रकाश ठाकुरः**

एकदा देवानां मध्ये विवादः सम्प्रवृत्तः "देवेषु कः प्रथमतया पूजनीयः'' इति। सर्वे देवाः आत्मानं प्रथम–पूज्यं मन्यन्ते स्म। अन्ते ते विवादनिर्णयार्थं प्रजापतिं ब्रह्माणम् एत्य निवेदितवन्तः भगवन् ! अस्मासु कः प्रथम पूजाम् अर्हति इति विषये विवादोऽस्ति। भवान् तु सर्ववित्। अतः भवतः निर्णयः सर्वमान्यः।

सृष्टिरचनायां परमव्यस्तोऽपि प्रजापतिः तेषां निवेदनं निशम्य अब्रवीत् – युष्मासु यः पृथ्वीप्रदक्षिणां कृत्वा प्रथमं माम् उपैष्यति, सः एव प्रथमपूजाम् अर्हति।

इत्याकर्ण्य सर्वे देवाः स्ववाहनानि अधिष्ठाय भूमण्डलस्य परिक्रमायै प्रचलिताः। महेन्द्रः ऐरावतगजम् आरूढः, वरुणः मकरम् आरुह्य समुद्रमार्गेण गन्तुं प्रवृत्तः। अन्ये स्थादिना त्वरिता जग्मुः। तुन्दिलः श्रीगणेशः उन्मनाः भूत्वा अतिष्ठत्। क्व महाकायो गणेशः क्व च तस्य वाहनं मूषकः ! कथम् एतावती दीर्घयात्रा मूषकवाहनेन सम्भविनी – इत्यासीत् चिन्ताकारणम्।

एवं चिन्तयतः श्रीगणेशस्य पुरः अकस्मात् हरिनाम कीर्तयन् देवर्षिः नारदः प्रकटयाम्बभूव। श्रीगणेशः सादरं तं सम्पूज्य अभाषत – देवर्षे ! कुत आगम्यते?

श्रीनारदः अवोचत्–अयि गणपते ! परिभ्रमणं मम सहजा अभिरुचिः। तया प्रेरितः अहम् अत्र आगमम्, किन्तु अद्य अहं त्वां चिन्तितमिव उपलक्षये । कस्माद् एवम् ?

श्रीगणेशः विहस्य अवदत् – भवान् सर्वज्ञः। पुनरपि निवेदयामि मम चिन्ताकारणम्। तदाकर्ण्य श्रीनारदः सस्मितम् अवदत्–अयि गणनायक। त्वं तु बुद्धिनिधानं ख्यातोऽसि । तव सकाशे युक्तीनामभावः कथं सम्भवति? त्वं वेत्सि – यत् शास्त्रेषु जननी पृथ्वीरूपा पिता च परमेश्वररूपः निर्दिष्टः। तर्हि काऽत्र चिन्ता? विधीयतां परिक्रमा।



श्रीगणेशोऽपि तद्वचः निशम्य जहास। द्रुतम् एव कैलाशम् उपेयिवान् सः मातरं पार्वतीं तत्र निनाय यत्र श्रीशङ्करः समाधिस्थः आसीत्। मातरं जनकस्य वामभागे उपवेश्य स्वयं मूषकम् अधिरुह्य तयोः सप्त प्रदक्षिणाः चकार। तदनु ब्रह्मलोकं गत्वा श्रीब्रह्मणः समक्षम् उपतस्थे।

सर्वज्ञः ब्रह्मदेवः सर्वप्रथमं तत्र उपस्थितं श्रीगणेशं वीक्ष्य स्व- नेत्र-संकेतेनैव तस्य प्रथमपूजनीयताम् प्रख्यापितवान्।

अतिचिरेण प्राप्ताः श्रमविवृतवदनाः देवाः प्रथमम् एव तत्रोपगतं श्रीगणेशं विलोक्य विस्मिताः बभूवुः। चतुर्वदनो ब्रह्मा स्मितपूर्वं मातापित्रोः भक्तिरहस्यं प्रतिपादयन् विलक्षणचातुर्यं श्रीगणेशं प्रथमपूज्यं देवम् उद्घोषितवान् ।



# क्षणैकं दुःखम्

-डॉ. शारदा रमेशः गाडगे

नित्यक्रमानुसारं मीरायाः दिवसः आरब्धः। अङ्गणसम्मार्जनं, रत्नावलि- रेखाटनं चायपानं सर्वं तया यथावत् कृतम्। अद्य महाविद्यालयं गन्तुं त्वरा आसीत्। यतो हि कालावकाशः आसीत्। अवकाशकाले गृहकार्येषु सा अधिकं कालं व्ययीकर्तुम् ऐच्छत्। भोजनं कृत्वा तस्याः भर्ता मदनः कार्यालयं गतः, कन्या पुत्रः च मित्रगृहं प्रयातौ इदानीं मीरा गृहे एकाकिनी। वस्तुतः अद्य नासीत् सा स्वस्था। श्वसने काचित् बाधा आसीत्। प्रवहे काचित् वेदना अपि उद्भूता। किन्तु न तया कोऽपि इति सूचितः। उपजतायाः कारणात् स्यात् इयम् अस्वस्थता इति विचिन्त्य सर्वाणि कार्याणि समाप्य भोजनपीठिकायाः समीपम् आगच्छत्। किन्तु नासीत् भोजनस्य इच्छा। अकस्मात् तीव्रा वेदना हृदयस्थाने उत्पन्ना। मीरा भूमौ न्यपतत्। किमभवत् इत्यपि न तया ज्ञातम् ।

तस्यामेव अवस्थायां केषामपि अस्फुटशब्दाः तस्याः कर्णे पतिताः। तया पृष्टं – 'कुत्र अस्मि अहम्? यूयं मां कुत्र नयथ?

'कोऽपि कृष्णवर्णीयः बलवान् दण्डधारी अवदत्- "यमदूताः वयम्। भवतीं यमलोकं नयामः।"

तस्य उत्तरेण कठोरस्वरेण च भयभीता मीरा अवदत् – ''कथं मां यमलोकं नयथ? को मम अपराधः? नाहं जीर्णा न वा रुग्णा। कृपया मां मां नयन्तु भोः।" पुनश्च अपरः कर्कशस्वरेण अवदत् – 'वयं यमराजस्य सेवकाः। तस्य आज्ञया एवं भवतीं नयामः। तूष्णीं भवतु इदानीम् ।'

क्षणार्धात् तैः यमदूतैः सा यमराजं प्रति नीता। तं सादरं प्रणम्य मीरा अवदत् – भगवन्, नाहम् एतावत् शीघ्रं मम लोकं त्यक्तुकामा। मम भर्ता, मम अपत्यद्वयं च मां विना कथं जीवेयुः। मम महाविद्यालये काऽपि परिषद् आयोज्यते मया। मां विना सा कथं सम्पद्येत? प्रेषयतु मां कृपया भूलोकम्। न मया केनापि सह सम्भाषितम् अन्तिमक्षणे। गृहस्य न काऽपि व्यवस्था कृता। विद्यापीठस्य कानिचन कार्याणि अपूर्णानि एव। माम् एकवारं तत्र प्रेषयतु ।"



तस्याः वचांसि श्रुत्वा यमराजः उच्चैः हसित्वा उवाच –न एतद् कदापि सम्भवति। अत्र आगतः मनुष्यः पुनः पृथिवीलोकं गन्तुं न शक्नोति। अपरं च सर्वे मनुष्याः अनिच्छया एव अत्र आगच्छन्ति। न कोऽपि मरणं वाञ्छति। जराजीर्णः अपि जीवनेच्छां न जहाति। अयि, सत्यं कथयामि अहं त्वम्। जगतः चक्रम् अविरतम्। न कोऽपि कस्यापि कृते तिष्ठति। केनापि विना कार्यावरोधः न भवति।

"सत्यं भवान् भणति। किन्तु मम कन्या अष्टम कक्षायां पठति। पुत्रस्य शालान्तपरीक्षा समीपे वर्तते। तयोः पिता सदैव स्वकार्ये निमग्नः। अतः तयोः चिन्ता मां बाधते।" मीरायाः पुनर्कथनम् – "भवतु। दिवसमेकम् अत्र स्थित्वा श्वः त्वं भूलोकं गन्तुमर्हसि। किन्तु एकवारं त्यक्तं शरीरं पुनः न लभते। शरीरं विना एव तत्र गत्वा सर्वं प्रत्यक्षीकृत्वा पुनः अत्र आगच्छ। न केनापि सह सम्भाषितुं शक्यते त्वया तत्र।'' – यमराजः उक्तवान्।

'अनुगृहीतास्मि भगवन् ।' – मीरा।

'अस्माकमेकः दिवसः नाम भूलोकस्य एकं वर्षम् इति जानासि नु? '–यमराजः अपृच्छत्।

सर्वमेतद् अज्ञातं, नूतनम् आसीत् तस्याः कृते। तत्रस्थः एकः दिवसः कथमपि तथा यापितः। अन्येद्युः यमदूतैः सा स्वगृहे प्राप्ता। अङ्गणे रङ्गावलिः नासीत्। तया चिन्तितं ''मां विना अङ्गणस्य सम्मार्जनं रङ्गावलिं च कः कुर्यात्?'' सा अन्तः प्रविष्टा। आद्ये कक्षे कोऽपि नासीत्। पाकगृहे तस्याः प्राणप्रियः मदनः पूजाकार्ये निमग्नः आसीत्। "अपि कथमेतद्, मम उपस्थितौ न अनेन कदापि देवः पूजितः। समयाभावात् क्वचित् देवाः अपूजिताः एव स्थिताः।" पाकगृहे कापि युवती कार्यमग्ना आसीत्। "का –एषा''– मीरायाः जिज्ञासा। तस्याः कण्ठे मङ्गलसूत्रं सुवर्णकङ्कणानि च दृष्ट्वा तया अवगतम् – ''मदनेन पुनर्विवाहः कृतः। गते वर्षे एव मया क्रीतानि सुवर्णकङ्कणानि तस्याः हस्ते दृश्यन्ते। तस्याः हृदयं नितराम् अदूयत्। तस्याः कन्या गृहसम्मार्जने व्यग्रा आसीत्। नासीत् तस्याः वदने मातृवियोगस्य दुःखम्। "मयि स्थितायां न तया कदापि मह्यं साहाय्यं कृतं, न वा कदापि चषकमात्रं चायं श्रान्तायै मह्यं प्रदत्तम्। अद्य तु कार्यं करोति।



"भवतु। पुत्रं पश्यामि इदानीम्।'' इति विचिन्त्य सा तस्य कक्षं प्रविष्टा। सः भ्रमणध्वनिसंलग्नः मित्रेण सह वार्तालापे निमग्नः आसीत्। तस्य पुस्तकानि वस्त्राणि, सङ्गणकयन्त्रं सर्वं यत्रतत्र पतितमासीत्। नासीत् गृहे कुत्राऽपि तस्याः छायाचित्रं, न वा तस्याः अस्तित्वस्य किमपि चिह्नम्। होराद्वयं तत्र स्थित्वा तया तेषां व्यवहाराः निरीक्षिताः। सर्वं पूर्ववदेव आसीत्। मदनस्य स्वस्थं शरीरं, तस्य भार्यायाः आनन्दितं मुखं कार्यं कुर्वन्ती, नृत्यन्ती, गायन्ती कन्या, स्वविश्वरतः पुत्रः इति सर्वं दृष्ट्वा ''मम मरणस्य नास्ति अत्र किमपि दुःखम्" इति अनुभूय सा भृशं दुःखिता।

स्वगृहं विहाय सा महाविद्यालयं प्राप्ता। तत्र सर्वे प्राध्यापकाः छात्राश्च पूर्ववत्, स्वकार्यरताः आसन्। सा प्राध्यापककक्षं प्रविष्टा। तस्याः रक्षणे काऽपि अन्या युवती उपविष्टा आसीत्। मीरायाः नामफलकः तत्र नासीत्। तस्य स्थाने अन्या काऽपि शिक्षिका आसीत्। तत्रापि सा होराद्वयम् अयापयत्। कस्यापि भाषणे तस्याः उल्लेखः न अभवत् निराशेन मनसा ततः निर्गत्य सा मातृगृहं प्राप्ता। तत्र अन्ये एव जनाः तयाः दृष्टाः। तस्याः अग्रजः तद् गृहं विक्रेतुम् ऐच्छत्। प्रायः स्वेच्छां पूरयित्वा सः सपरिवारम् अन्यत्र गतः स्यात् इति मीरया चिन्तितम्।

"इदानीं कुत्र गन्तव्यमस्ति?" -यमदूतेन पृष्टम्। "भवद्भिः सह यमलोकमेव आगच्छामि'' मीरया नेत्रसङ्केतेन एव सूचितम्। शनैः शनैः सा पुनश्च यमलोकम् आगता ।



**-१९/ई रामकृपा ''भाङ्गे बिहारः,**
**त्रिमूर्ति नगरम् नागपुरम्-२२**

# सुख-दुःखस्य विवेचनम्

**-मनोज कुमारः डिमरी**

सम्पूर्णेस्मिन् भूण्डले विविध मानव प्रजातिभिः स्वः सामाजिक चिन्तनानुरूपं पृथक्-पृथक् जीवन पद्धतिरङ्गी क्रियते। प्रायः सर्वे भौतिक सुख समृद्धि वैभवादि प्राप्त्यर्थमेव यतन्तो दृश्यन्ते। तेषां चरमोद्देश्यमपि विविध भौतिक साधन संग्रहैः दैहिक सुख प्राप्तिरेव भवति।

परञ्च भारतीयैः मनीम्षिभिः प्रत्यक्षगोचरात् अस्मात् शरीरात् परमपि कस्यचिद्दृश्य तत्त्वस्यानुभूतिः कृता। तैरनुभूतं यदस्मिन शरीर भूते नवद्वारे पुरे एकं नित्यं शुद्ध बुद्धं मुक्तं सूक्ष्मं तत्त्वं स्थितं विद्यते। अयमात्मेत्यभिधीयते अयं न जायते न म्रियते। एनं शस्त्राणि न छिन्दन्ति, पावको न दहति, आपो न क्लेदयन्ति, मारुतो न शोधयति। अयमेव विशुद्धात्मा परमात्मा रथभूतस्य देहस्य रथी च कथ्यते। अखण्डादस्मादात्मनोऽखण्ड रूपेणैव समुद्भव एषो जीवलोक ऊर्ध्वभूलोऽवाशाखोऽश्वत्थः सदृशो वर्तते। अत आत्मन एव चिन्तनं निदिध्यासनञ्च सारभूतमस्ति।

अध्यात्मं-प्रधानस्यास्य जीवनस्य प्रभावः संस्कृत वाङ्मये भारतीय समाजे च सर्वत्र द्रष्टं शक्यते। अस्मादध्यात्म प्रधानादेव जीवनात्'' त्यक्तेन भुञ्जीथेति त्यागन्वितः भोगस्य विचारधाराऽविर्भूता। त्यागमय-चिन्तनादेव वाल्मीकि रामायणे श्रीरामचन्द्रः पित्राज्ञा पालनार्थं स्व राज्यं सुख-वैभवञ्च परित्यज्य महारण्ये गच्छति भरतो राज्ये ज्येष्ठ भ्रातुः श्रीरामचन्द्रस्याधिकारं मत्वा कथयति-

**तद् ददामि तवैवाहं भुङ्क्ष्व राज्यमकण्टकम्।**

परञ्च यदा श्रीरामचन्द्रः पिता भरताय प्रदत्तं राज्यं केनापि प्रकारेण न स्वीकरोति तदा भरतः कथयति-

**चतुर्दशे हि सम्पूर्णे वर्षेऽहनि रघूत्तम।**<br>
**न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामिहुताशनम्।**

भोगानल दग्धे भूमखण्डेऽस्मिन राज्य प्राप्त्यर्थं सत्ता सुख लाभार्थञ्च स्वपितृ भातृ सम्बन्धि जनानां वधस्य वहवो दृष्टान्ता दृश्यन्ते परञ्च न कोऽपि एतादृशो दृष्टान्तोऽवलोक्यते यत्र भ्राता स्वः भ्रातुः हेतोः स्वाधिगतस्य राज्यस्य परित्यागं करोति। रघुवंश महाकाव्ये महाराज रघुः दिग्विजयेषु पराक्रम पूर्वकं समग्रं महीमण्डलं विजित्य स्वकुटीरे कुश-विरचित शय्यायां शयनं मृन्मय पात्रेषु च भोजनं कुर्वन् कुटीरस्थोऽपि महाट्टालिकाधि-वासिनां प्रजा जनानां हृदयेषु शासनञ्च कुर्वन् स्वत्यागादर्शाद् आदानं हि विसर्गाय सतां वारिमुचामिवेति कथनं सार्थकं करोति।

समग्र वैभवानामधीश्वरः पुराण प्रसिद्धो भगवान योगिराज शंकर स्वयं कपाल पाणिः दिगम्बरो भूत्वा भोगादधिकं त्यागमेव महिमा मण्डितं करोति।

अध्यात्म प्रधान जीवन दर्शनात् संस्कृत वाङ्मये परोपकार यज्ञ दान तपोमय चिन्तनधारा प्रादुर्भूता। परोपकारजं पुण्यं तु न स्याद् क्रतुशतैरपि परोपकार: पुण्याय पापाय परपीडनं प्रभृति परोपकारोत्प्रेरक सूक्तय: यज्ञो वै श्रेष्ठतमं कर्म यज्ञोदानं तपश्चैव पावनानि मनीषिणां प्रभृति–यज्ञ–दान तपोत्प्रेरक सूक्तयश्च जनमानसं सततमुदात्भावन्वितं कुर्वन्ति। अध्यात्म प्रधान जीवना देव धर्मार्थ काम मोक्षेति–पुरुषार्थ चतुष्टय प्राप्ति रूप जीवन लक्ष्यस्य निर्धारणम् भूतम्। अर्थकामौ मूलतो भौतिक लक्ष्यं साधयतो मोक्षश्चाध्यात्मिक लक्ष्यम्। एतेषां सर्वेषां धर्ममूलत्वाद् महर्षि वेदव्यासो बाहूरूद्यभ्योद्घोषयति यत् धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते। तथैव च मा गृध: कस्यस्विद् धनम् धर्माविरूद्धो भूतेषु कामोऽस्मि इत्यर्थकामयो: धर्मानुरूप सेवनं मोक्ष प्राप्ति प्रयत्नञ्च भौतिकैश्वर्यस्योद्दाम–प्रवाहं रोद्धुं  समर्थोऽस्ति अध्यात्म प्रधान जीवनादेव ब्रह्मचर्य–गृहस्थ–वानप्रस्थ सन्यास एव चतुपदी समन्विताश्रम व्यवस्था प्रादुर्भूता। ब्रह्मचर्य वानप्रस्थ–सन्न्यासाश्रमेषु त्याग तपोमयजीवनचर्याया: प्राधान्यं भवत्येव। इति



**–सम्पादक सहायक:**
**दि.स.अ.**

# भारतीय-स्वाधीनता-संग्रामः, बारडोली-सत्याग्रहः

**- दिनेश चन्द्र शर्मा**

भारतीय-स्वाधीनता-संग्रामे बारडोली-सत्याग्रह-आन्दोलनं बल्लभ भाई-पटेलस्य नेतृत्वे १९२८ तमे वर्षे गुर्जरप्रान्ते अभवत् तदान्दोलनं प्रामुख्येन कृषकान्दोलनम् आसीत्। आन्दोलनस्य मूलकारणं तात्कालिकप्रान्तीय-सर्वकारेण राजस्वे त्रिंशतप्रतिशतम् अभिवर्धनम् आसीत्। पटेलेन एतस्य राजस्ववृद्धेः घोरविरोधः कृतः। तस्मादेव सत्याग्रहान्दोलनम् आरब्धम्, एतस्य आन्दोलनस्य समर्थनं सर्वैः जनैः कृतम्। सर्वकारेण एतत् आन्दोलनम् अभिभवितुं नैके दृढप्रयासाः विहिताः, परन्तु अन्ततो परवशं भूत्वा कृषकाभ्यर्थना सर्वकारेण स्वीकृता राजस्वं च तत्र ऋणीकृत्य ६.०३ प्रतिशतं कृतम्।

एतस्य आन्दोलनस्य साफल्यानन्तरं पटेलाय 'सरदार' इति उपाधिः प्रदत्तः। साफल्ये च गान्धिना प्रोक्तं यत् एवंविधसङ्घर्षेण वयं स्वराजं निकषा प्राप्नुमः।

'भारतीय-राष्ट्रिय-आन्दोलने' बारदोली-सत्याग्रह-आन्दोलनं सर्वथा सङ्घटितं व्यापकं सफलञ्च आन्दोलनम् आसीत्। ३०प्रतिशतं राजस्ववृद्धेः विरोधे इदम् आसीत्। अस्मिन् आन्दोलने १३७ ग्रामाणां ८७,०००सङ्ख्यकाः कृषकाः १९०८ तमे वर्षे कुंवरजी-कल्याण-जी-मेहता इत्यनयोः नेतृत्वे विरोधाय सङ्घटिताः जाताः।

परन्तु बारदोली-आन्दोलनं १९२० तमे वर्षे सूरते-जनपदस्य कृषकैः बारदोली-राजस्व-अप्रदान-विषये सञ्चालितम्। अस्मिन् आन्दोलने गुर्जरस्य पाटीदार-कृषकैः एव न अपि तु सर्वजातिसमुदाय-जनैः भागो गृहीतः। १९२२ तमे वर्षे मेहताबन्ध्वोः (कल्याण-कुंवरयोः) अपि च दयालवर्यस्य च समर्थनेन आन्दोलनं सगति अग्रे सरितम्। अनन्तरकाले एतस्य नेतृत्वं १९२८ तमे वर्षे सरदार-बल्लभ-भाई-पटेलेन कृतम्। पटेलेन प्रचुरजनसमर्थनमधिगतं तस्मात् सर्वकारः विवशो भूत्वा कृषकायाचनाः अङ्गीकृतवन्तः।

फरवरीमासे ४ दिनांके १९२८ तमे वर्षे बल्लभभाईपटेलः बारदोली-कृषक-सत्याग्रहस्य नेतृत्वमारब्धम्। सर्वादौ वर्धितराजस्वं विरुध्य सर्वकाराय पत्रं प्रेषितम्, किन्तु सर्वकारेण सकारात्मकोत्तरं न प्रदत्तम्। परिणामतः पटेलेन कृषकाः सङ्घीकृताः तेन चोक्तं यत् कृषकाः राजस्वं न दद्युः। अपरतः कांग्रेसस्य शान्तपथसमवायेन 'सर्वेण्ट्स् आफ् इण्डिया सोसायटी' इत्यस्य माध्यमेन सर्वकारेण कृषकाभ्यर्थना-सर्वेक्षणस्य अनुरोधः कृतः। 'बारदोली-सत्याग्रहः' नाम्ना काचित् दैनिकपत्रिका प्रकाशिता। बम्बयि-विधान-परिषदः भारतीयनेतारः त्यागपत्रं दत्तवन्तः। ब्रिटेनसंसदि अपि चर्चा जाता। बायसरायलार्ड-इरविनः बम्बयि-गवर्नराय विल्सनाय प्रकरणस्यास्य त्वरितशमनाय निर्दिष्टवान्। अपरतः पटेलस्य निग्रहणसम्भावनां परिलक्ष्य वैकल्पिकनेतृत्वाय अगस्तमासे २दिनांके १९२८ तमवर्षे गान्धी बारदोलीं प्राप्तवान्।

महिला: अपि अस्मिन् आन्दोलने महत्त्वं भूमिकाम् उढवत्य:, यत्र बम्बयिनगरस्य पारसी-महिला मीठूबेन-पेंटिट:, भक्तिवा, मनीबेनपटेल:, सुपुत्री शारदाबेनशाह: अपि च शाहदराशाहस्य नामानि उल्लेनीयानि सन्ति। पटेलेन बारदोलिजना: प्रभाविता: जाता:। एतस्यैव सत्याग्रहकाले तत्रत्यमहिला: पटेलाय सरदार इति उपाधिं प्रदत्तवत्य:। सर्वकारेण ब्रुमफील्डाय मैक्सबेलाय च बारदोलीप्रकरणे निरीक्षणादेशा: प्रदत्ता:। निरीक्षणसमाख्यायां वर्धितं ३० प्रतिशतं राजस्वम् अवैधानिकम् इति घोषितम्। अत: सर्वकारेण राजस्वं ६.०३ इति प्रतिशतं विकलितम्। अनेन प्रकारेण सरदारबल्लभभाईपटेलस्य नेतृत्वे बारदोली-कृषक-आन्दोलनं साफलतापूर्वकं सम्पन्नम्।



**-सहायक-प्रचार प्रसार अधिकारी**
**दिल्ली संस्कृत अकादमी**
**दिल्ली सर्वकार:**

# शब्द-रूपम्

## सर्वनाम शब्द

### अदस् ( वह ) ( पुंल्लिग )

| विभक्ति | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | असौ | अमू | अमी |
| द्वितीया | अमूम् | अमू | अमन् |
| तृतीया | अमुना | अमूभ्याम् | अमीभिः |
| चतुर्थी | अमुष्मै | अमूभ्याम् | अमीभ्यः |
| पञ्चमी | अमुष्मात् | अमूभ्याम् | अमीभ्यः |
| षष्ठी | अमुष्य | अमुयोः | अमीषाम् |
| सप्तमी | अमुस्मिन् | अमुयोः | अमीषु |

### ( स्त्रीलिंग )

| विभक्ति | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | असौ | अमू | अमूः |
| द्वितीया | अमूम् | अमू | अमूः |
| तृतीया | अमुना | अमूभ्याम् | अमीभिः |
| चतुर्थी | अमुष्यै | अमूभ्याम् | अमूभ्यः |
| पञ्चमी | अमुष्याः | अमूभ्याम् | अमूभ्यः |
| षष्ठी | अमुष्याः | अमुयोः | अमूषाम् |
| सप्तमी | अमूष्याम् | अमुयोः | अमुषुः |

### ( स्त्रीलिंग )

| विभक्ति | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | अदः | अमू | अमूनि |
| द्वितीया | अदः | अमू | अमूनि |
| तृतीया | अमुना | अमूभ्याम् | अमीभिः |
| चतुर्थी | अमुष्मै | अमूभ्याम् | अमीभ्यः |
| पञ्चमी | अमुष्मात् | अमूभ्याम् | अमूभ्यः |
| षष्ठी | अमुष्य | अमुयोः | अमीषाम् |
| सप्तमी | अमुनिष्मन् | अमुयोः | अमीषु |

## यत् ( जो ) ( पुंल्लिग )

| विभक्ति | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | यः | यौ | ये |
| द्वितीया | यम् | यौ | यान् |
| तृतीया | येन | याभ्याम् | यैः |
| चतुर्थी | यस्मै | याभ्याम् | येभ्यः |
| पञ्चमी | यस्मात् | याभ्याम् | येभ्यः |
| षष्ठी | यस्य | ययोः | येषाम् |
| सप्तमी | यस्मिन् | ययोः | येषु |

## यत् ( स्त्रीलिंग )

| विभक्ति | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | या | ये | याः |
| द्वितीया | याम् | ये | याः |
| तृतीया | यया | याभ्याम् | याभिः |
| चतुर्थी | यस्यै | याभ्याम् | याभ्यः |
| पञ्चमी | यस्याः | याभ्याम् | याभ्यः |
| षष्ठी | यस्याः | ययोः | यासाम् |
| सप्तमी | यस्याम् | ययोः | यासु |

## ( नपुंसकलिंग )

| विभक्ति | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | यत् | ये | यानि |
| द्वितीया | यत् | ये | यानि |
| तृतीया | येन | याभ्याम् | यैः |
| चतुर्थी | यस्मै | याभ्याम् | येभ्यः |
| पञ्चमी | यस्मात् | याभ्याम् | येभ्यः |
| षष्ठी | यस्य | ययोः | येषाम् |
| सप्तमी | यस्मिन् | ययोः | येषु |

## तत् ( वह ) ( पुंल्लिग )

| विभक्ति | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सः | तौ | ते |
| द्वितीया | तम् | तौ | तान् |
| तृतीया | तेन | ताभ्याम् | तैः |
| चतुर्थी | तस्य | ताभ्याम् | तेभ्यः |
| पञ्चमी | तस्मात् | ताभ्याम् | तेभ्यः |
| षष्ठी | तस्य | तयोः | तेषाम् |
| सप्तमी | तस्मिन् | तयोः | तेषु |

## तत् ( स्त्रीलिंग )

| विभक्ति | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सा | ते | ताः |
| द्वितीया | ताम् | ते | ताः |
| तृतीया | तया | ताभ्याम् | ताभिः |
| चतुर्थी | तस्यै | ताभ्याम् | ताभ्यः |
| पञ्चमी | तस्याः | ताभ्याम् | ताभ्यः |
| षष्ठी | तस्याः | तयोः | तासाम् |
| सप्तमी | तस्याम् | तयोः | तासु |

## तत् ( नपुंसकलिंग )

| विभक्ति | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | तत् | ते | तानि |
| द्वितीया | तत् | ते | तानि |
| तृतीया | तेन | ताभ्याम् | तैः |
| चतुर्थी | तस्य | ताभ्याम् | तेभ्यः |
| पञ्चमी | तस्मात् | ताभ्याम् | तेभ्यः |
| षष्ठी | तस्य | तयोः | तेषाम् |
| सप्तमी | तस्मिन् | तयोः | तेषु |

## इदम् ( यह ) ( स्त्रीलिंग )

| विभक्ति | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | इयम् | इमे | इमाः |
| द्वितीया | इमाम् | इमे | इमाः |
| तृतीया | अनया | आभ्याम् | आभिः |
| चतुर्थी | अस्यै | आभ्याम् | आभ्यः |
| पञ्चमी | अस्याः | आभ्याम् | आभ्यः |
| षष्ठी | अस्याः | अनयोः | आसाम् |
| सप्तमी | अस्याम् | अनयोः | आसु |

## धातु रूपम्

### सेव ( सेवा करना ) ( लट् लकार )

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुष– | सेवते | सेवेते | सेवन्ते |
| मध्यमपुरुष– | सेवसे | सेवथे | सेवध्वे |
| उत्तमपुरुष– | सेवे | सेवावहे | सेवामहे |

### ( लोट् लकार )

| | | | |
|---|---|---|---|
| प्रथमपुरुष– | सेवाताम् | सेवेताम् | सेवन्ताम् |
| मध्यमपरुष– | सेवस्य | सेवेथाम् | सेवध्वम् |
| उत्तमपुरुष– | सेवै | सेवावहै | सेवामहै |

### ( लङ् लकार )

| | | | |
|---|---|---|---|
| प्रथमपुरुष– | असेवत | असेवेताम् | असेवन्त |
| मध्यमपुरुष– | असेवथा | असेवेथाम् | असेवध्वम् |
| उत्तमपुरुष– | असेवे | असेवावहि | असेवामहि |

### ( विधिलिङ् लकार )

| | | | |
|---|---|---|---|
| प्रथमपुरुष– | सेवेत | सेवेयाताम् | सेवेरन् |
| मध्यमपुरुष– | सेवेथाः | सेवेयाथाम् | सेवेध्वम् |
| उत्तमपुरुष– | सेवेय | सेवेवहि | सेवेमहि |

### ( लृट् लकार )

| | | | |
|---|---|---|---|
| प्रथमपुरुष– | सेविष्यते | सेविष्येते | सेविष्यन्ते |
| मध्यमपुरुष– | सेविष्यसे | सेविष्येथे | सेविष्यध्वे |
| उत्तमपुरुष– | सेविष्ये | सेविष्यावहे | सेविष्यामहे |

## किम् ( पुंल्लिग )

| विभक्ति | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | क: | कौ | के |
| द्वितीया | कम् | कौ | कान् |
| तृतीया | केन | काभ्याम् | कै: |
| चतुर्थी | कस्य | काभ्याम् | केभ्य: |
| पञ्चमी | कस्मात् | काभ्याम् | केभ्य: |
| षष्ठी | कस्य | कयो: | केषाम्: |
| सप्तमी | कस्मिन् | कयो: | केषु |

## किम् ( कौन ) ( नपुंसकलिंग )

| विभक्ति | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | किम् | के | कानि |
| द्वितीया | किम् | के | कानि |
| तृतीया | केन | काभ्याम् | कै: |
| चतुर्थी | कस्मै | काभ्याम् | केभ्य: |
| पञ्चमी | कस्मात् | काभ्याम् | केभ्य: |
| षष्ठी | कस्य | कयो: | केषाम् |
| सप्तमी | कस्मिन् | कयो: | केषु |

## इदम् ( यह ) ( पुल्लिंग )

| विभक्ति | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | अयम् | इमौ | इमे |
| द्वितीया | इमम् | इमौ | इमान् |
| तृतीया | अनेन | आभ्याम् | एभि: |
| चतुर्थी | अस्मै | आभ्याम् | एभ्य: |
| पञ्चमी | अस्मात् | आभ्याम् | एभ्य: |
| षष्ठी | अस्य | अनयो: | एषाम् |
| सप्तमी | अस्मिन् | अनयो: | एषु |

**कृ ( करना ) ( परस्मैपद )**

**( लट् लकार )**

| | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| **प्रथमपुरुष–** | करोति | कुरुत: | कुर्वन्ति: |
| **मध्यमपुरुष–** | करोषि | कुरुथ: | कुरुथ |
| **उत्तमपुरुष–** | करोमि | कुर्व: | कुर्म: |

**( लृट् लकार )**

| | | | |
|---|---|---|---|
| प्रथमपुरुष– | करिष्यति | करिष्यत: | करिष्यन्ति |
| **मध्यमपरुष–** | करिष्यसि | करिष्यथ: | करिष्यथ |
| **उत्तमपुरुष–** | करिष्यामि | करिष्याव: | करिष्याम: |

**( आत्मनेपद ) ( लट् लकार )**

| | | | |
|---|---|---|---|
| **प्रथमपुरुष–** | कुरुते | कुर्वाते | कुर्वते |
| **मध्यमपुरुष–** | कुरुषे | कुर्वाथे | कुरुध्वे |
| **उत्तमपुरुष–** | कुर्वे | कुर्वहे | कुर्महे |

**( लृट् लकार )**

| | | | |
|---|---|---|---|
| **प्रथमपुरुष–** | करिष्यते | करिष्येते | करिष्यन्ते |
| **मध्यमपुरुष–** | करिष्यसे | करिष्येथे | करिष्यध्वे |
| **उत्तमपुरुष–** | करिष्ये | करिष्यावहे | करिष्यामहे |

**कृ ( करना ) ( परस्मैद )**

**( लोट लकार )**

| | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| **प्रथमपुरुष–** | करोतु | कुरुताम् | कुर्वन्तु |
| **मध्यमपुरुष–** | कुरु | कुरुतम् | कुरुथ |
| **उत्तमपुरुष–** | करवाणि | करवाव | करवाम |

**( लङ् लकार )**

| | | | |
|---|---|---|---|
| प्रथमपुरुष– | अकरोत् | अकुरुताम् | अकुर्वन् |
| **मध्यमपुरुष–** | अकरो: | अकुरुतम् | अकुरुत |
| **उत्तमपुरुष–** | अकरवम् | अकुर्व | अकुर्म |

( विधिलिङ् लकार )

| | | | |
|---|---|---|---|
| **प्रथमपुरुष–** | कुर्यात् | कुर्याताम् | कुर्युः |
| **मध्यमपुरुष–** | कुर्याः | कुर्यातम् | कुर्यात |
| **उत्तमपुरुष–** | कुर्याम् | कुर्याव | कुर्याम |

**( आत्मनेपद )**

**लोट् लकार**

| | | | |
|---|---|---|---|
| **प्रथमपुरुष–** | कुरुताम् | कुर्वाताम् | कुर्वताम् |
| **मध्यमपुरुष–** | कुरुष्व | कुर्वाथाम् | कुरुध्वम् |
| **उत्तमपुरुष–** | करवै | कुरवावहै | करवामहै |

**( लङ् लकार )**

| | | | |
|---|---|---|---|
| **प्रथमपुरुष–** | अकुरुत | अकुर्वाताम् | अकुर्वत |
| **मध्यमपुरुष–** | अकुरुथाः | अकुर्वाथाम् | अकुरुध्वम् |
| **उत्तमपुरुष–** | अकुर्वि | अकुर्वहि | अकुर्महि |

**( विधिलिङ् लकार )**

| | | | |
|---|---|---|---|
| **प्रथमपुरुष–** | कुर्वीत | कुर्वीयाताम् | कुर्वीरन् |
| **मध्यमपुरुष–** | कुर्वीथा | कर्वीयाथाम् | कुर्वीध्वम् |
| **उत्तमपुरुष–** | कुर्वीय | कुर्वीवहि | कुर्वीमहि |

**–सम्पादक सहायकः**
**दि.सं.अ.**

सुरुचिपूर्ण मासिक बाल संस्कृत पत्रिका

# "संस्कृत-चन्द्रिका"

नैतिक-मूल्यों के साथ-साथ

सम्पूर्ण देश के बाल-साहित्यकारों तथा नवोदित प्रतिभाओं

की लेखनी की संयुक्त प्रस्तुति

## "संस्कृत-चन्द्रिका"

( आई.एस.एस.एन.-2347–1565 )

संस्कृत भाषा के प्रचार-प्रसार हेतु प्रयत्नशील दिल्ली संस्कृत अकादमी, दिल्ली सरकार द्वारा सरल संस्कृत-भाषा में प्रकाशित एक ऐसी सुरुचिपूर्ण एवं ज्ञान-विज्ञान तथा नैतिक शिक्षा की बाल- मासिक पत्रिका जो प्रत्येक वर्ग के पाठक-समुदाय की अपेक्षा के

**मूल्यः- एक प्रति रु.२५/- मात्र, वार्षिक सदस्यता शुल्क रु. २५०/- मात्र**

सुरुचि सम्पन्न स्वस्थ सकारात्मक अभिव्यक्ति की संवाहिका

## "संस्कृत-चन्द्रिका"

के स्थायी अध्येता बनें।

आज ही अपना वार्षिक सदस्यता शुक्ल नगद, मनिआर्डर अथवा दिल्ली में भुनाये जाने योग्य बैंक ड्राफ्ट दिल्ली संस्कृत अकादमी के नाम से भिजवाकर सदस्यता प्राप्त करें। शुल्क मल्टी सिटी चैक द्वारा भी स्वीकार्य होगा।




पत्र व्यवहार का पता --

**सचिव/ सम्पादक, दिल्ली संस्कृत अकादमी, दिल्ली सरकार**

**प्लाट सं.-५ झण्डेवालान, करोलबाग, नई दिल्ली-११०००५**

**दूरभाष सं.- ०११-२३६३५५९२, २०९२०३६३**

